श्रीचण्डी षष्ठ्युत्तरत्रिशत्यर्चनं
(प्रतिपदायां- भूपुरे- प्रकाशानन्दनाथवासरे)
ॐ श्रीनित्यायै नमः
ॐ जगन्मूर्तये नमः
ॐ देव्यै नमः
ॐ भगवत्यै नमः
ॐ महामायायै नमः
ॐ प्रसन्नायै नमः
ॐ वरदायै नमः
ॐ मुक्तिदायिन्यै नमः
ॐ परमायै नमः
ॐ हेतुभूतायै नमः
ॐ सनातन्यै नमः
ॐ संसारबन्धहेतवे नमः
ॐ सर्वेश्यै नमः
ॐ ईश्वर्यै नमः
ॐ योगनिद्रायै नमः
ॐ हरिनेत्रकृतालयायै नमः
ॐ विश्वेश्वर्यै नमः
ॐ जगद्धात्र्यै नमः
ॐ स्थितिकारिण्यै नमः
ॐ संहारकारिण्यै नमः
ॐ श्रीनिद्रायै नमः
ॐ भगवत्यै नमः
ॐ अतुलायै नमः
ॐ तेजसां निधये नमः
ॐ स्वाहायै नमः
ॐ स्वधायै नमः

ॐ वषट्कारायै नमः
ॐ स्वरात्मिकायै नमः
ॐ सुधायै नमः
ॐ अक्षरायै नमः
ॐ त्रिधामात्रात्मिकायै नमः
ॐ अर्धमात्रात्मिकायै नमः
ॐ स्वररूपिण्यै नमः
ॐ अनुच्चार्यायै नमः
ॐ सन्ध्यायै नमः
ॐ सावित्र्यै नमः
ॐ जनन्यै नमः
ॐ परायै नमः
ॐ सृष्टिरूपायै नमः
ॐ जगद्योनये नमः40
(द्वितीयायां- षोडशदळे- विमर्शानन्दनाथवासरे)
ॐ श्रीस्थितिरूपायै नमः
ॐ संहृतिरूपायै नमः
ॐ जगन्मयायै नमः
ॐ महाविद्यायै नमः
ॐ महामायायै नमः
ॐ महामेधायै नमः
ॐ महामोहायै नमः
ॐ भवत्यै नमः
ॐ महादेव्यै नमः
ॐ महासुर्यै नमः
ॐ प्रकृत्यै नमः
ॐ सत्वादिगुणत्रयविभाविन्यै नमः
ॐ कालरात्र्यै नमः

ॐ महारात्र्यै नमः
ॐ मोहरात्र्यै नमः
ॐ दारुणायै नमः
ॐ सुरेश्वर्यै नमः
ॐ ह्रियै नमः
ॐ बुद्ध्यै नमः
ॐ श्रीविद्यायै नमः
ॐ सुलक्षणायै नमः
ॐ लज्जायै नमः
ॐ पुष्ट्यै नमः
ॐ तुष्ट्यै नमः
ॐ शान्त्यै नमः
ॐ क्षान्त्यै नमः
ॐ खड्गिन्यै नमः
ॐ शूलिन्यै नमः
ॐ घोरायै नमः
ॐ गदिन्यै नमः
ॐ चक्रिण्यै नमः
ॐ शङ्खिन्यै नमः
ॐ चापिन्यै नमः
ॐ बाणायै नमः
ॐ भुशुण्ड्यै नमः
ॐ परिघायुधायै नमः
ॐ सौम्ययै नमः
ॐ सुन्दर्यै नमः
(तृतीयायां- अष्टदळे- आनन्दानन्दनाथवासरे)
ॐ श्रीपरायै नमः
ॐ परमेश्वर्यै नमः

ॐ परमायै नमः
ॐ सदात्मिकायै नमः
ॐ असदात्मिकायै नमः
ॐ सदसदात्मिकायै नमः
ॐ अखिलात्मिकायै नमः
ॐ नार्यै नमः
ॐ शिवायै नमः
ॐ सिंहवाहिन्यै नमः
ॐ अम्बिकायै नमः
ॐ श्रीभद्रकालिकायै नमः
ॐ चण्डिकायै नमः
ॐ जगन्मात्रे नमः
ॐ महिषासुरघातिन्यै नमः
ॐ आत्मशक्तये नमः
ॐ सर्वानन्दमय्यै नमः
ॐ श्रद्धायै नमः
ॐ गुणात्मिकायै नमः
ॐ सर्वाश्रयायै नमः
ॐ अव्याकृतायै नमः
ॐ आद्यायै नमः
ॐ शब्दात्मिकायै नमः
ॐ वार्तायै नमः
ॐ आर्तिहन्त्र्यै नमः
ॐ मेधायै नमः
ॐ दुर्गायै नमः
ॐ भवसमुद्रनवे नमः
ॐ कैटाभारि हृदयैक कृतालयायै नमः
ॐ गौर्यै नमः

ॐ सदार्द्रचित्तायै नमः
ॐ गीर्वाणवरदायिन्यै नमः
ॐ देव्यै नमः
ॐ महादेव्यै नमः
ॐ शिवायै नमः
ॐ भद्रायै नमः
ॐ रौद्र्यै नमः
ॐ धात्र्यै नमः
ॐ ज्योत्स्नायै नमः
(चतुर्थ्यां- चतुर्दशारे- ज्ञानानन्दनाथवासरे)
ॐ श्री इन्दुरूपिण्यै नमः
ॐ सुखायै नमः
ॐ कल्याण्यै नमः
ॐ ऋद्ध्यै नमः
ॐ सिद्ध्यै नमः
ॐ कुर्मिकायै नमः
ॐ नैरृत्यै नमः
ॐ भूभृतां लक्ष्म्यै नमः
ॐ शर्वाण्यै नमः
ॐ दुर्गायै नमः
ॐ दुर्गपारायै नमः
ॐ सारायै नमः
ॐ सर्वकारिण्यै नमः
ॐ क्षान्त्यै नमः
ॐ कृत्स्नायै नमः
ॐ धूम्रायै नमः
ॐ अतिसौम्यायै नमः
ॐ अतिरौद्रायै नमः

ॐ जगत्प्रतिष्ठायै नमः
ॐ कृष्णायै नमः
ॐ श्रीविष्णुमायायै नमः
ॐ चेतनायै नमः
ॐ बुद्धिरूपायै नमः
ॐ निद्रारूपायै नमः
ॐ क्षुधारूपायै नमः
ॐ छायारूपायै नमः
ॐ शक्तिरूपायै नमः
ॐ तृष्णारूपायै नमः
ॐ क्षान्तिरूपायै नमः
ॐ जातिरूपायै नमः
ॐ लज्जारूपायै नमः
ॐ शान्तिरूपायै नमः
ॐ श्रद्धारूपायै नमः
ॐ कान्तिरूपायै नमः
ॐ लक्ष्मीरूपायै नमः
ॐ वृत्तिरूपायै नमः
ॐ धृतिरूपायै नमः
ॐ स्मृतिरूपायै नमः
ॐ दयारूपायै नमः
ॐ तुष्टिरूपायै नमः
(पञ्चम्यां - बहिर्दशारे- सत्यानन्दनाथवासरे)
ॐ श्रीपुष्टिरूपायै नमः
ॐ मातृरूपायै नमः
ॐ भ्रान्तिरूपायै नमः
ॐ शुभहेतवे नमः
ॐ पार्वत्यै नमः

ॐ कौशिक्यै नमः
ॐ कालिकायै नमः
ॐ उग्रचण्डायै नमः
ॐ कृष्णायै नमः
ॐ हिमाचलकृतालयायै नमः
ॐ धूम्रलोचनहन्त्र्यै नमः
ॐ असिन्यै नमः
ॐ पाशिन्यै नमः
ॐ विचित्रखट्वाङ्गधरायै नमः
ॐ नरमालाविभूषणायै नमः
ॐ द्वीपिचर्मपरीधानायै नमः
ॐ शुष्कमांसायै नमः
ॐ अतिभैरवायै नमः
ॐ अतिविस्तारवदनायै नमः
ॐ जिह्वाललनभीषणायै नमः
ॐ श्रीनिमग्नायै नमः
ॐ आरक्तनयनायै नमः
ॐ नादापूरितदिङ्मुखायै नमः
ॐ भीमाक्ष्यै नमः
ॐ भीमरूपायै नमः
ॐ चण्डविनाशिन्यै नमः
ॐ मुण्डविनाशिन्यै नमः
ॐ चामुण्डायै नमः
ॐ लोकविख्यातायै नमः
ॐ ब्रह्माण्यै नमः
ॐ ब्रह्मवादिन्यै नमः
ॐ माहेश्वर्यै नमः
ॐ वृषारूढायै नमः

ॐ त्रिशूलधारिण्यै नमः
ॐ वरधारिण्यै नमः
ॐ महाबलायै नमः
ॐ अहिबलायै नमः
ॐ चन्द्ररेखाविभूषितायै नमः
ॐ कौमार्यै नमः
ॐ शक्तिहस्तायै नमः
(षष्ठ्यां - अन्तर्दशारे- पूर्णानन्दनाथवासरे)
ॐ श्रीमयूरवाहनायै नमः
ॐ गुहरूपायै नमः
ॐ वैष्णव्यै नमः
ॐ गरुडोपरिस्थितायै नमः
ॐ शङ्खहस्तायै नमः
ॐ चक्रहस्तायै नमः
ॐ गदाहस्तायै नमः
ॐ शाङ्र्गहस्तायै नमः
ॐ खड्गहस्तायै नमः
ॐ वाराह्यै नमः
ॐ श्रीनारसिंह्यै नमः
ॐ घोररावायै नमः
ॐ सटाक्षेपक्षिप्तनक्षत्रसंहृत्यै नमः
ॐ वज्रहस्तायै नमः
ॐ ऐन्द्र्यै नमः
ॐ गजराजोपरिस्थितायै नमः
ॐ सहस्रनयनायै नमः
ॐ शक्रहस्तायै नमः
ॐ भीषणायै नमः
ॐ श्रीशक्तये नमः

ॐ अत्युग्रायै नमः
ॐ शिवाशतनिनादिन्यै नमः
ॐ अपराजितायै नमः
ॐ शिवदूत्यै नमः
ॐ कात्यायन्यै नमः
ॐ रक्तबीजनाशिन्यै नमः
ॐ चन्द्रघण्टिकायै नमः
ॐ अष्टादशभुजायै नमः
ॐ उग्रायै नमः
ॐ निशुम्भासुरघातिन्यै नमः
ॐ शुम्भहन्त्र्यै नमः
ॐ प्रपन्नार्तिहरायै नमः
ॐ विश्वेश्वर्यै नमः
ॐ आधारभूतायै नमः
ॐ महीरूपायै नमः
ॐ अपां रूपायै नमः
ॐ आप्यायिन्यै नमः
ॐ अलङ्घ्यवीर्यायै नमः
ॐ अनन्तबीजायै नमः
(सप्तम्यां - अष्टारे- स्वभावानन्दनाथवासरे)
ॐ श्रीबीजस्वरूपिण्यै नमः
ॐ सम्मोहिन्यै नमः
ॐ विद्यायै नमः
ॐ स्वर्गप्रदायिन्यै नमः
ॐ मुक्तिप्रदायिन्यै नमः
ॐ अशेषजनहृत्संस्थायै नमः
ॐ नारायण्यै नमः
ॐ शिवायै नमः

ॐ कलाकाष्ठादिरूपायै नमः
ॐ परिणामप्रदायिन्यै नमः
ॐ सर्वमङ्गलमाङ्गल्यायै नमः
ॐ शिवायै नमः
ॐ सर्वार्थसाधिकायै नमः
ॐ शरण्यायै नमः
ॐ त्र्यम्बकायै नमः
ॐ गौर्यै नमः
ॐ सृष्ट्यत्मिकायै नमः
ॐ स्थित्यात्मिकायै नमः
ॐ लयात्मिकायै नमः
ॐ शक्त्यै नमः
ॐ श्रीसनातन्यै नमः
ॐ गुणाश्रयायै नमः
ॐ गुणमयायै नमः
ॐ नारायणस्वरूपिण्यै नमः
ॐ शरणागत-परित्राण-परायणायै नमः
ॐ दीन-परित्राण-परायणायै नमः
ॐ आर्त-परित्राण-परायणायै नमः
ॐ सर्वस्यार्तिहर्यै नमः
ॐ देव्यै नमः
ॐ विष्णुरूपायै नमः
ॐ परात्परायै नमः
ॐ हंसयुक्तविमानस्थायै नमः
ॐ ब्रह्माणीरूपधारिण्यै नमः
ॐ कौशाम्भोधारिण्यै नमः
ॐ क्षुरिकाधारिण्यै नमः
ॐ शूलधारिण्यै नमः

ॐ चन्द्रधारिण्यै नमः
ॐ अहिधारिण्यै नमः
ॐ वरधारिण्यै नमः
ॐ महावृषभसंरूढायै नमः
(अष्टम्यां - त्रिकोणे- प्रतिभानन्दनाथवासरे)
ॐ श्रीमहेश्वर्यै नमः
ॐ त्रैलोक्यत्राणसहितायै नमः
ॐ किरीटवरधारिण्यै नमः
ॐ शिवदूतीस्वरूपिण्यै नमः
ॐ हतदैत्यायै नमः
ॐ वृत्रप्राणहरणायै नमः
ॐ महासत्वायै नमः
ॐ घोररूपायै नमः
ॐ महारवायै नमः
ॐ दंष्ट्राकराळवदनायै नमः
ॐ शिरोमालाभूषणायै नमः
ॐ चामुण्डायै नमः
ॐ मुण्डमथन्यै नमः
ॐ लक्ष्म्यै नमः
ॐ लज्जायै नमः
ॐ महाविद्यायै नमः
ॐ श्रद्धायै नमः
ॐ पुष्ट्यै नमः
ॐ सदाध्रुवायै नमः
ॐ महारात्र्यै नमः
ॐ श्रीमहाविद्यायै नमः
ॐ महामेधायै नमः
ॐ सरस्वत्यै नमः

ॐ वरायै नमः
ॐ भीतिदायै नमः
ॐ तामस्यै नमः
ॐ नियतेशायै नमः
ॐ सर्वतः पाण्यन्तायै नमः
ॐ सर्वतः पादान्तायै नमः
ॐ सर्वतोऽक्ष्यन्तायै नमः
ॐ सर्वतः शिरोऽन्तायै नमः
ॐ सर्वतोमुखान्तायै नमः
ॐ सर्वतोघ्राणान्तायै नमः
ॐ सर्वस्वरूपिण्यै नमः
ॐ सर्वेशायै नमः
ॐ सर्वरूपायै नमः
ॐ सर्वशक्तिसमन्वितायै नमः
ॐ समस्तरोगहन्त्र्यै नमः
ॐ समस्ताभीष्टदायिन्यै नमः
(नवम्यां - बिन्दौ- सुभागानन्दनाथवासरे)
ॐ श्रीविश्वात्मिकायै नमः
ॐ पापहारिण्यै नमः
ॐ उत्पातपाकजनितोपसर्गचयनाशिन्यै नमः
ॐ विश्वार्तिहारिण्यै नमः
ॐ त्रैलोक्यवरदायिन्यै नमः
ॐ नन्दगोपगृहेजातायै नमः
ॐ यशोदागर्भसम्भवायै नमः
ॐ विन्ध्याद्रिवासिन्यै नमः
ॐ रौद्ररूपिण्यै नमः
ॐ श्रीरक्तदन्तिकायै नमः
ॐ दाडिमीकुसुमप्रख्यायै नमः

ॐ अयोनिजायै नमः
ॐ शतलोचनायै नमः
ॐ भीमायै नमः
ॐ शाकम्भर्यै नमः
ॐ दुर्गायै नमः
ॐ दानवेन्द्रविनाशिन्यै नमः
ॐ महाकाल्यायै नमः
ॐ महाकाल्यै नमः
ॐ श्रीमहामार्यै नमः
ॐ अजायै नमः
ॐ लक्ष्मीप्रदायै नमः
ॐ वृद्धिप्रदायै नमः
ॐ नित्यायै नमः
ॐ पुत्रपौत्रवर्धिन्यै नमः
ॐ शैलपुत्र्यै नमः
ॐ ब्रह्मचारिण्यै नमः
ॐ चन्द्रघण्टायै नमः
ॐ विशालाक्ष्यै नमः
ॐ श्रीकूष्माण्डायै नमः
ॐ वेदमातृकायै नमः
ॐ स्कन्दमात्रे नमः
ॐ गणेश्यै नमः
ॐ विरूपाक्ष्यै नमः
ॐ अम्बिकायै नमः
ॐ महागौर्यै नमः
ॐ महावीर्यायै नमः
ॐ महाबलायै नमः
ॐ महापराक्रमायै नमः

(दशम्यां - बिन्दौ - समष्टि पूजनं)

सङ्कल्पे विशेषः
सहस्त्र-फणामणि-मण्डल-मण्डितस्य शेष-पर्यङ्क-शयानस्य भगवतः श्रीमन्नारायणास्य सृष्ट्यादौ नाभि कमलादाविर्भूतस्य ब्रह्मणः संरक्षणार्थं विष्णुकर्णमलोद्भूतयोः मधुकैटभयोः निग्रहार्थं ब्रह्मणा संप्रार्थितायाः विष्णोः नेत्र आस्य नासिका बाहु हृदयेभ्यः उरसश्च आविभूतायाः दशवक्त्रायाः दशभुजायाः दशपादायाः नीलमणिद्युतेः रूप सौभाग्यकान्तीनां परम प्रतिष्ठायाः श्रीमहाकाल्याः - स सैन्य सहित महिषासुर निग्रहार्थं सर्व देव शरीरेभ्यो ज्योतिरूपेण आविर्भूतायाः अष्टादशभुजायाः प्रवाळवर्णायाः कमलासनस्थायाः त्रिगुणात्मिकायाः महिषमर्दिन्याः श्रीमहालक्ष्म्याः - स सैन्य सहित शुम्भ निशुम्भ धूम्रलोचन चण्ड मुण्ड रक्तबीजादि निग्रहार्थं गौरी देहात् समुद्भूतायाः ब्राह्म्यादि शक्ति सहितायाः स्फटिकवर्णायाः अष्टभुजायाः सर्वज्ञत्वप्रदायाः श्रीमहासरस्वत्याः लोक संरक्षणार्थं नन्दा रक्तदन्तिका शाकम्भरी भीमा दुर्गा भ्रामरी रूपेण कृतावतारायाः एतासां समष्टिरूपेण विरजन्त्याः श्रीचण्डिकापरमेश्वर्याः 'एभिस्स्तवैश्च मां नित्यं स्तोष्यते यः मानवः तस्याहं सकलां बाधां शम्यिष्याम्यसंशयं' इति श्री देव्योक्त प्राकारेण स्तोतॄणां सकलबाधा निवृत्तिप्रदायाः 'यत्रैतत्पठ्यते सम्यक् नित्यमायतने मम। सदा न तत् विमोक्ष्यामि सान्निध्यं तत्र मे स्थितं'च' सर्वं ममैतन्माहात्म्यं मम सन्निधिकारणं' इति च श्री देव्योक्त प्राकारेण उपासकानां गेहे नित्यं सान्निहितायाः 'श्रुतं हरति पापानि तथारोग्यं प्रयच्छति' इति श्रीदेव्योक्त प्राकारेण सकृत् श्रवणादेव सकल पापहर पूर्वक सकल आरोग्य प्रदायाः 'सर्वाबाधासु घोरासु वेदनाभ्यर्दितोऽपि वा।स्मरन् ममैतच्चरितं नरो मुच्यते सङ्कटात्' इति श्रीदेव्या दत्त वरप्रदाने स्मरणादेव सकल शत्रुबाधा निवृत्तिप्रदायाः'श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभा'; इति श्रीदेव्योक्तरीत्या सर्वसम्पत्प्रद विचित्र पवित्र चरित्र वैभवायाः 'उपसर्गानशेषांस्तु महामारीसमुद्भवान्।तथा त्रिविधमुत्पातं माहात्म्यं

शमयेन्मम; इति श्रीदेव्योक्त प्राकारेण महामार्यादि रोगणां स्मरणादेव शान्तिप्रदायाः परदेवतायाः श्रीजगन्मातुः प्रसादसिद्ध्यर्थं श्री जगन्मातुः प्रसादात् आसेतु हिमाचल निवसतां आस्तिक महाजनानां आबाल वृद्धानां द्विपदां चतुष्पदां च क्षेमवाप्त्यर्थं पुत्र पशु विद्या ऐश्वर्य धन धान्य गृह आराम क्षेत्रादि अभिवृद्ध्यर्थां श्रीपरदेवतायाः परम प्रीतिकर शापोद्धार उत्कीलन मन्त्र जप -कवच अर्गल कीलक- नवाक्षरमन्त्र जप रात्रीसूक्त पठन पूर्वक मार्कण्डेयपुराणन्तर्गत सावर्णिमन्वान्तरे त्रयोदशाध्यायात्मक सप्तशतमन्त्ररूप चण्डिकाख्य पठनं तदन्तरं देवीसूक्त नवाक्षरमन्त्रजप रहस्यत्रय उत्कीलन मन्त्र जपं करिष्ये।।